वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्य्यनालैः।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः॥१५॥
तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीड़ाशैलः कनककदलीवेष्टनप्रेक्षणीयः।

इतः पञ्चभिः श्लोकैरभिज्ञानान्तरमाह वापीति। अस्मिन् मदीयागारे मरकतशिलाभिः बद्धः सोपानमार्गः यस्याः सा तथोक्ता विदूरेभवाः वैदूर्य्याः (विदूरात् ञ्य इति ञ्यप्रत्ययः।) वैदूर्य्याणाम् विकाराः वैदूर्य्याणि (विकारार्थे अन्प्रत्ययः।) स्निग्धानि वैदूर्य्याणि नालानि येषां तैः हैमैः सौवर्णैः विकचकमलैः छन्ना वापी च अस्ति इति शेषः यस्याः वाप्याः तोये कृतवसतयः कृतनिवासाः हंसाः त्वां मेघं प्रेक्ष्य अपि व्यपगतशुचः वर्षाकालेऽपि व्यपगतकलुष जलत्वात् वीतदुःखाः सन्तः सन्निकृष्टं सन्निहितं सुगमम् अपि इत्यर्थः मानसं मानससरः न आध्यास्यन्ति न उत्कण्ठिष्यन्ति। आध्यानमुत्कण्ठास्मरण-मिति काशिकायाम्॥ १५॥

तस्या इति। तस्याः वाप्याः तीरे पेशलैः चारुभिः (चारौ दक्षे च पेशल इत्यमरः।) इन्द्रनीलैः रचित-शिखरः इन्द्रनीलमणिमयशिखर इत्यर्थः कनककदलीनां

मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततड़ितं त्वां तमेव स्मरामि॥१६॥
रक्ताशोकश्चलकिशलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य।

वेष्टनेन परिधिना प्रेक्षणीयः दर्शनीयः क्रीडाशैलः अस्ति इति शेषः हे सखे उपान्तेषु प्रान्तेषु स्फुरिताः तडितः यस्य तं तथोक्तम् इदं विशेषणं कदलीसाम्यार्थमुक्तम् इन्द्रनील-साम्यं तु मेघस्य स्वाभाविकम् इत्यनेन सूच्यते त्वां प्रेक्ष्य मद्गेहिन्याः प्रियः इति हेतोः तस्य शैलस्य मद्गृहिणी-प्रियत्वात् हेतोः इत्यर्थः कातरेण भीतेन चेतसा (भयञ्चात्र सानन्दमेव वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात्। श्रव-णात् कीर्त्तनाद्वापि सानन्दा भीर्यथा भवेदिति रसाकरे दर्शनात्।) तम् एव क्रीडाशैलम् एव स्मरामि एवकारो विषयान्तरव्यवच्छेदार्थः सदृशवस्त्वनुभवात् इष्टार्थस्मृतिर्जा-यते इत्यर्थः। अत एवात्र स्मरणाख्योऽलङ्कारः तदुक्तं सदृशा-नुभवादन्यस्मृतिः स्मरणमुच्यते इति। निरुक्तकारस्तु त्वां तमेव स्मरामीति योजयित्वा मेघे शैलत्वारोपमाचष्टे तदसङ्गतम् अद्राकारारोपस्य पुरोवर्त्तिन्यनुभवात्मकत्वेन स्मरतिशब्दप्रयोगायोगात् शैलत्वभावना स्मृतिरित्यपि नोपपद्यते भावनायाः स्मृतित्वे प्रमाणाभावात् अनुभवा-योगात् सादृश्योपन्यास वैयर्थ्याच्च विसदृशेऽपि शालग्रामे हरिभावनादर्शनादिति॥ १६॥

एक: सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः१७

रक्तेति। अत्र क्रीडाशैले कुरवकाः एव वृतिः आवरणं यस्य तस्य मधौ वसन्ते भवाः माधव्यः तासां मण्डपः तस्य अतिमुक्तलतागृहस्य (अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलतेत्यमरः।) प्रत्यासन्नौ सन्निकृष्टौ चलकिशलयः चञ्चलपल्लवः अनेन वृक्षस्य पादताडनेषु प्राञ्जलित्वं व्यज्यते रक्ताशोकः (रक्तविशेषणं तस्य स्मरोद्दीपकत्वादुक्तं प्रसूनकैरशोकस्तु श्वेतो रक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्द्धन इत्यशोककल्पे दर्शनात्।) कान्तः कमनीयः केशरः वकुलश्च (अथ केसरे वकुल इत्यमरः।) स्त इति शेषः। एकः तयोरन्यतरः प्राथमिकत्वादशोक इत्यर्थः मया सह तव सख्याः स्वप्रियाया इत्यर्थः वामपादाभिलाषो दोहदच्छद्मनेति अत्रापि सम्बन्धनीयं स च अहं च अभिलषाव इत्यर्थः अन्यः केसरः दोहदं वृक्षादीनां प्रसवकारणं संस्कारद्रव्यम् (तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रियेति शब्दार्णवे।) तस्य छद्मना व्याजेन (कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे इत्यमरः।) अस्याः तव सख्याः वदनमदिरां गण्डूषमद्यं काङ्क्षति मया सहेति अत्रापि सम्बन्धनीयम्। अशोकवकुलयोः स्त्रीपादताडनगण्डूषमदिरे दोहदमिति प्रसिद्धिः। स्त्रीणां स्पर्शात् प्रियङ्गुर्वि-

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ १८ ॥

कसति वकुलः शीधुगण्डूषसेकात् पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतो गीतान्नमेरुर्विकसति च पुरोनर्त्तनात् कर्णिकारः ॥ १७ ॥

तन्मध्ये इति । किञ्चेति चार्थः तन्मध्ये तयोर्द्वयोर्मध्ये अनति प्रौढानाम् अनति कठोराणां वंशानां प्रकाश इव प्रकाशो येषां तैः तरुणवेणुसच्छायैः मणिभिः मरकतशिलाभिः मूले बद्धा कृतवेदिकेत्यर्थः स्फटिकं स्फटिकमयं फलकं पीठं यस्याः सा काञ्चनस्य विकारः काञ्चनी सौवर्णी वासयष्टिः निवासदण्डः अस्तीति शेषः शिञ्जा भूषणध्वनिः (भूषणानान्तु शिञ्जितमित्यमरः । भिदादित्वादङ् । शिञ्जिधातुरयं तालव्यादिः न तु दन्त्यादिः । ) शिञ्जाप्रधानानि वलयानि तैः सुभगाः रम्याः तैः तालैः करतलवादनैः मे मम कान्तया नर्त्तितः वो युष्माकं सुहृत् सखा नीलकण्ठः मयूरः ( मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः ।.) दिवसविगमे सायंकाले यां यष्टिकाम् अध्यास्ते यस्याम् आस्ते इत्यर्थः ( अधिशीङ्स्थासां

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुनामद्वियोगेन नूनं
सूर्य्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥१९

कर्म्मेति कर्म्मत्वात् द्वितीया । ) तत्रागारमित्यारभ्य पञ्चसु श्लोकेषु समृद्धवस्तुवर्णनादुदात्तालङ्कारः तदुक्तं तदुदात्तं भवेद्यत समृद्धं वस्तु वर्ण्यते इति ॥ १८ ॥

एभिरिति । हे साधो निपुण ( साधुः समर्थो निपुणो वेति काशिकायाम् । ) हृदयनिहितैः अविस्मृतैरित्यर्थः एभिः पूर्व्वोक्तैर्लक्षणैः तोरणादिभिरभिज्ञानैः द्वारोपान्ते एकवचनमविवक्षितं द्वारपार्श्वयोरित्यर्थः; लिखिते वपुषी आकृती ययोः तौ तथोक्तौ शङ्खपद्मौ नाम निधिविशेषौ ( निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेरित्यमरः । ) दृष्ट्वा च नूनं सत्यं अधुना इदानीम् (अधुनेति निपातः । ) मद्वियोगेन मम प्रवासेन क्षामच्छायम् उत्सवोपरमात् क्षीणकान्ति भवनं मद्गृहं लक्षयेथाः निश्चिनुयाः; तथाहि सूर्य्यापाये सति कमलं पद्मं स्वाम् आत्मीयाम् अभिख्यां शोभाम् ( अभिख्या नामशोभयोरित्यमरः । ) न पुष्यति न उपचिनोति खलु सूर्य्यविरहितं पद्ममिव पतिविरहितं गृहं न शोभते इत्यर्थः ॥ १९ ॥

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीड़ाशैले प्रथमकथिते रम्यसानौ निषस्सः।
अर्हस्यन्तर्भवनपतितां कर्त्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम्॥२०
तन्वीश्यामा शिखरिदशना पक्कविम्बाधरोष्ठी-
मध्येक्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।

(निजगृहनिश्चयानन्तरकृत्यमाह गत्वेति। हे मेघ शीघ्रसम्पात) एव हेतुः तस्य शीघ्रप्रवेशार्थमित्यर्थः (षष्ठी हेतुप्रयोगे इति षष्ठी। सम्पातः पतने वेगे प्रवेशे वेदसंविदे इति शब्दार्णवे।) सद्यः सपदि कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावः ताम् अल्पशरीरतां गत्वा प्राप्य प्रथम-कथिते तस्यास्तीरे इत्यादिना पूर्वोद्दिष्टे रम्यसानौ निष-दनयोग्ये इत्यर्थः क्रीडाशैले निषस्सः उपविष्टः सन् अल्पाल्पा अल्पप्रकार भाः प्रकाशो यस्याः ताम् (प्रकारे गुणवचनस्येति द्विरुक्तिः।) खद्योतानाम् आली तस्या विलसितेन स्फुरि-तेन निभां समानां विद्युदुन्मेषः विद्युत्प्रकाशः स एव दृष्टिः ताम् भवनस्यान्तः अन्तर्भवनं तत्र पतितां प्रविष्टां कर्त्तुम् अर्हसि यथा कश्चित् किञ्चिदन्विष्यन् क्वचिदुन्नते स्थित्वा शनैः शनैरतितरां द्राघीयसीं दृष्टिमिष्टदेशे पातयति तद्वदित्यर्थः॥ २०॥

सम्प्रति दृष्टिपातं कृतवतोऽस्याभिज्ञानं श्लोकद्वयेनाह

श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः॥२१॥

तन्वीति। तन्वी कृशाङ्गी नतु पीवरी (स्तृक्ष्णं दभ्रं कृशं तनु इत्यमरः। वोतो गुणवचनादिति ङीष्।) श्यामा युवतिः (श्यामा यौवनमध्यस्था इत्युत्पलमालायाम्।) शिखराणि एषां सन्तीति शिखरिणः कोटिमन्तः (शिखरं शैलवृक्षाग्रकक्षापुलककोटिष्विति विश्वः।) शिखरिणः दशनाः दन्ताः यस्याः सा एतेनास्या भाग्यवत्त्वं पत्यायुष्करत्वञ्च सूच्यते (तदुक्तं सामुद्रिके स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः। दन्ता भवन्ति यासां तासां पादे जगत् सर्वम्। ताम्बूलरक्तरक्तोऽपि स्फुटभासः समादयाः। यस्याः शिखरिणो दन्ता दीर्घं जीवति तत्पतिरिति। पक्वं परिणतं बिम्बं बिम्बिकाफलमिव अधरोष्ठो यस्याः सा पक्वबिम्बाधरोष्ठी (शाकपार्थिवादित्वान्मध्यपदलोपी समास इति वामनः। नासिकोदरोष्ठेत्यादिना ङीष्।) मध्ये क्षामा कृशोदरीत्यर्थः चकितहरिण्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा तथोक्ता एतेनास्याः पद्मिनीत्वं व्यज्यते (तदुक्तं रतिरहस्ये पद्मिनीलक्षणप्रस्तावे चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे इति।) निम्ननाभिः गम्भीरनाभि अनेन नारीणां नाभिगाम्भीर्य्यान्मदनातिरेक इति कामसूत्रार्थः सूच्यते श्रोणीभारात् अलसगमना मन्द-

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥

गामिनी न तु जघनदोषात् स्तनाभ्यां स्तोकनम्रा ईषद्वनता न तु वपुर्दोषात् युवतय एव विषयः तस्मिन् युवतिविषये युवतीरधिकृत्येत्यर्थः धातुः ब्राह्मणः आद्या सृष्टिः प्रथमशिल्पमिव स्थितेत्युत्प्रेक्षा प्रथमनिर्मिता युवतिरियमेवेत्यर्थः प्रायेण शिल्पिनां प्रथमनिर्माणे प्रयत्नातिशयवशात् शिल्पनिर्माणसौष्ठवं दृश्यते इत्याद्यविशेषणं तथाच अस्मिन् प्रपञ्चे न कुत्राप्येवंविधरामणीयकं रमणीरत्नमस्तीति भावः तदेवम्भूता या स्त्री तत्रान्तर्भवने स्यात् तत्र निवसेदित्यर्थः तामित्युत्तरश्लोकेन सम्बन्धः ॥ २२ ॥

तामिति । सहचरे सहचारिणि अनेन वियोगासहिष्णुत्वं व्यज्यते मयि दूरीभूते दूरस्थिते सति सहचरे चक्रवाके दूरीभूते सति चक्रवाकीं चक्रवाकवधूमिव ( जातेरस्त्रीविषयादयोपधादिति ङीष् । ) परिमितकथां मितभाषिणीम् एकाम् एकाकिनीं स्थितां ताम् अन्तर्भवनगतां मे द्वितीयं जीवितं जानीथाः जीविततुल्यां मत्प्रेयसीमवगच्छेरित्यर्थः तन्वीत्यादिपूर्वलक्षणैरिति शेषः । लक्षणानामन्यथाभावभ्रममशङ्क्याह गाढोत्कण्ठामिति गाढोत्कण्ठां

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियाया
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा-
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति॥२३॥

प्रबलविरहवेदनाम् ( रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्यभिधानात् । ) बालां गुरुषु विरहमहत्सु एषु वर्त्तमानेषु दिवसेषु गच्छत्सु सत्सु शिशिरेण शिशिरकालेन मथितां पद्मिनीं वा पद्मिनीमिव ( इववद्वायथाशब्दाविति दण्डी । अन्यरूपां पूर्वविपरीताकारां जातां मन्ये हिमहतपद्मिनीव विरहेण अन्यादृशी जातेति तर्कयामीत्यर्थः एतावता नेयमन्येति भ्रमितव्यमिति भावः ॥ २२ ॥

नूनमिति । प्रबलरुदितेन उच्छूने स्फुटितपुटे नेत्रे यस्य तत् ( उच्छूनेति श्वयतेः कर्त्तरि क्तः आदितश्चेति निष्ठानत्वं यचिस्वपीत्यादिना सम्प्रसारणं सम्प्रसारणाच्चेति पूर्वरूपत्वं हल इति दीर्घः । च्छ्वोः शूडनुनासिके चेति ऊडादेशे कृते रूपसिद्धिरिति वर्त्तमानसामीप्यप्रक्रिया प्रमादिकोत्प्रेक्षा तथा सति धातोरिकारस्य गत्वभावात् ऊडादेश च्छ्वोरन्त्यत्वेन विशेषणाच्चेति । ) एतेन विषादो व्यज्यते निश्वासानाम् अशिशिरतया अन्तस्तापोष्णत्वेन भिन्नवर्णः विच्छायः अधरोष्ठो यस्य तत् हस्ते न्यस्तं हस्तन्यस्तम्

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।

एतेन चिन्ता व्यज्यते लम्बालकत्वात् संस्काराभावान्नम्ब-मानकुन्तलत्वात् असकलव्यक्ति असम्पूर्णाभिव्यक्ति तस्याः प्रियायाः मुखं त्वदनुसरणेन त्वदुपरोधेन क्लिष्टकान्तेः क्षीण-कान्तेः इन्दोः दैन्यं शोच्यतां बिभर्त्ति नूनमिति वितर्के ( नूनं तर्केऽर्थनिश्चये इत्यमरः । ) पूर्ववत् तथापि न भ्रमि-तव्यमिति भावः ॥ २३ ॥

सर्वविरहिणीसाधारणानि लक्षणानि सम्भावनया उत्प्रेक्षमाणोत्याह आलोके इत्यादिभिस्त्रिभिः। हे मेघ सा मत्प्रिया बलिषु नित्येषु प्रोषितागमनार्थेषु च देवताराधनेषु व्याकुला व्यापृता वा विरहेण तनु कृश भावगम्यं तत्कार्श्यस्य अदृष्टचरत्वात् सम्प्रति सम्भावनयोत्प्रेक्ष्यमित्यर्थः मत्सादृश्यं मदाकार साम्य मत्प्रतिकृतिमित्यर्थः ( यद्यपि सादृश्यं नाम प्रसिद्धवस्त्वन्तरगतसाकारसाम्यं तथापि प्रतिकृतित्वेन विवक्षितम् इतरथा लेख्यत्वासम्भवात् अत्र-यकोशे आलेख्ये च सादृश्यमित्यभिधानाच्च । ) लिखन्ती क्वचित् फलकादौ विन्यस्यन्ती वा चित्रदर्शनस्य विरहिणी-विनोदोपायत्वादिति भावः । एतच्च कामशास्त्रसंवादेन सम्यक् विवेचितमस्माभी रघुवंशसञ्जीवन्यां सादृश्यप्रति-कृतिदर्शनैः प्रियाया इत्यत्र । मधुरवचनां मञ्जुभाषिणीम्

पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्त्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति॥२४
उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्-
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती॥२५

अतएव पञ्जरस्थां हिंस्रेभ्यः कृतसंरक्षणामित्यर्थः सारिकां स्त्रीपक्षिविशेषं हे रसिके भर्त्तुः स्वामिनः स्मरसि कच्चित् स्मरसि किम् (कच्चित् कामप्रवेदने इत्यमरः।) भर्त्तारं स्मरसि किमित्यर्थः (अधीगर्थदयेशां कर्म्मणीति कर्म्मणि षष्ठी।) स्मरणे कारणमाह हि यस्मात् कारणात् त्वं तस्य भर्त्तुः प्रीणातीति प्रिया (इगुपधज्ञाप्रीकिर इति कप्रत्ययः।) अतः प्रेमास्पदत्वात् स्मर्त्तुमर्हसीति भावः इत्येवं पृच्छन्ती वा वाशब्दो विकल्पे (उपमायां विकल्पे वेत्यमरः।) ते तव आलोके दृष्टिपथे पुरा निपतति सद्यो निपतिष्यतीत्यर्थः। स्यात् प्रबन्धे पुरातीते निकटागामिके पुरेत्यमरः। यावत्पुरानिपातयोर्लडिति लट्॥ २४॥

उत्सङ्गे इति। हे सौम्य साधो मलिनवसने (प्रोषिते मलिना कृशेति शास्त्रादित्यर्थः।) उत्सङ्गे ऊरौ वीणां निक्षिप्य मम गोत्रं नाम अङ्कः चिह्नं यस्मिन् तत् मद्गोत्राङ्कं मन्नामाङ्कं यथा तथा (गोत्रन्तु नाम्नि चेत्यमरः)

शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः।
मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः॥ २६॥
कुलकम्।

सव्यापारामहनि न तथा पीडयेन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।

विरचितानि पदानि यस्य तत् तथोक्तं गेयं गानार्हं प्रबन्धादि गीतमिति पाठे स एवार्थः उद्गातुम् उच्चैर्गातुं कामो यस्याः सा (तुम् काममनसोरिति मकारलोपः।) देवयोनित्वात् गान्धारग्रामं गातुकामेत्यर्थः (तदुक्तं षड्जमध्यमनामानौ ग्रामौ गायन्ति मानवाः नतु गान्धारनामानं स लभ्यो देवयोनिभिरिति।) तथा नयनसलिलैः प्रियतमस्मृतिजनितैः अश्रुभिः आर्द्रां तन्त्रीं कथञ्चित् कष्टेण सारयित्वा आर्द्रत्वापहरणाय करेण प्रमृज्य अन्यथाक्वणनासम्भवादिति भावः भूयोभूयः पुनःपुनः स्वयम् आत्मना कृतामपि विस्मरणानर्हामपीत्यर्थः मूर्च्छनां स्वरारोहावरोहक्रमम् (स्वराणां स्थापनाः सान्ताः मूर्च्छनाः सप्त सप्त हीति सङ्गीतरत्नाकरे।) विस्मरन्ती वा आलोके ते निपततीति पूर्वेणान्वयः॥ २५॥

शेषानिति। अथवा विरहस्य दिवसः तस्मात् स्थापि-

स त्वं रात्रौ जलद शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥०॥
सव्यापारामहनि न तथा पीड़येन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे-
तामुन्निद्रामवनिशयनां सौधवातायनस्थः ॥२७॥

तस्य तत आरभ्य निश्चितस्य अवधेः अन्तस्य शेषान् गतावशिष्टान् मासान् देहलीदत्तपुष्पैः देहली द्वारस्याधारदारु ( गृहावग्रहणी देहलीत्यमरः । ) तत्र दत्तानि राशित्वेन निहितानि यानि पुष्पाणि तैर्गणनया एको द्वावित्यादिसंख्यानेन भुवि भूतले विन्यस्यन्ती वा पुष्पविन्यासैर्मासान् गणयन्ती वा इत्यर्थः । यद्वा हृदये निहितः मनसि सङ्कल्पितः आरम्भः उपक्रमो यस्य तम् अथवा हृदयनिहिताः आरम्भाः चुम्बनादयो व्यापारा यस्मिन् तं मत्सङ्गं मत्सम्भोगरतिम् आस्वादयन्ती वा आलोके ते निपतति इति पूर्वेण सम्बन्धः ननु कथमयं निश्चय इत्याशङ्कामर्थान्तरन्यासेन परिहरति प्रायेण बाहुल्येन अङ्गनानां रमणविरहेषु एते पूर्वोक्ता विनोदाः कालयापनोपायाः । एतेन सङ्कल्पावस्था उक्ता तदुक्तं सङ्कल्पो नाथविषयो मनोरथ उदाहृत इति त्रिभिः कुलकम् ॥ २५ ॥

सव्यापारामिति । हे सखे अहनि दिवसे स व्यापारां

आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।
नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या-
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥२८॥

पूर्वोक्तबलिचित्रलेखनादिव्यापारवतीं ते सखीं स्वप्रियां मद्वियोगः मद्विरह तथा तेन प्रकारेण (प्रकारवचने थाल् इति थाल्प्रत्ययः।) न पीडयेत् यथा रात्राविति शेषः किन्तु रात्रौ निर्विनोदां निर्व्यापारां ते सखीं गुरुतरा शुक् यस्याः तां गुरुतरशुचम् अतिदुर्भरदुःखां शङ्के तर्कयामि (शङ्का वितर्कभययोरिति शब्दार्णवे।) अतो निशीथे अर्द्धरात्रे उन्निद्राम् उत्सृष्टनिद्राम् अवनिरेव शयनं शय्या यस्याः तां नियमार्थं स्थण्डिलशायिनीं साध्वीं पतिव्रताम् (साध्वी प्रतिव्रतेत्यमरः।) अतो नान्यथा शङ्कितव्यमिति भावः तां त्वत्सखीं मत्सन्देशैः मद्वार्त्ताभिः अलं पर्य्याप्तं सुखयितुम् आनन्दयितुं सौधवातायनस्थः सन् पश्य। (सखा धात्री च पितरौ मित्रदूतशुकादयः सुखयन्तीष्ट-कथनसुखोपायैर्वियोगिनीमिति रत्नाकरे।) दूतश्चायं मेघ इति भावः। अनेन जागरावस्था उक्ता॥ २७॥

पुनस्तामेव विशिनष्टि आधिक्षामामित्यादिभिश्चतुर्भिः। आधिना मनोव्यथया क्षामां कृशाम् (पुंस्याधिर्मानसी व्यथेत्यमरः। क्षायतेः कर्त्तरि क्तः। क्षायो म इति निष्ठातकारस्य मकारः।) विरहे शयनं तस्मिन् विरह

पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
चक्षुः खेदात् सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥२९

शयने पल्लवादिरचिते इत्यर्थः सन्निषण्णम् एकं पार्श्वं यस्याः ताम् अतएव प्राच्याः पूर्वस्याः दिशो मूले उदयगिरिप्रान्ते इत्यर्थः प्राचीग्रहणं क्षीणावस्थाद्योतनार्थम् मूलग्रहणं दृश्यतार्थम् कलामात्रं कला एव शेषो यस्याः तां हिमांशोः तनुं मूर्त्तिमिव स्थितां तथा या रात्रिः मया सार्द्धम् इच्छया कृतानि रतानि तैः (शाकपार्थिवादित्वान्मध्यपदलोपी समासः ।) क्षण इव नीतायापिता तां तज्जातीयामिव रात्रिं विरहेण महतीं महत्त्वेन प्रतीयमानाम् उष्णैः अश्रुभिः यापयन्तीम् । (याते र्ण्यन्तात्कृत्प्रत्ययः । अर्त्तिह्रीत्यादिना पुगागमः । ) स एव कालः सुखिनामल्पः प्रतीयते दुःखिनान्तु विपरीत इति भावः । एतेन कार्श्यावस्था उक्ता ॥ २८ ॥

पादानिति । जालमार्गं प्रविष्टान् गवाक्षविवरगतान् अमृत शिशिरान् इन्दोः पादान् रश्मीन् पूर्वं प्रीत्या पूर्वस्नेहेन पूर्ववदानन्दकरा भविष्यन्तीति बुद्ध्येति भावः अभिमुखं यथा तथा गतं तथैव सन्निवृत्तं यथा गतं तथैव प्रतिनिवृत्तं तदा तेषामतीव दुःसहत्वादिति भावः चक्षुः

अन्येद्युर्व्यामवनिशयने सन्निकीर्णैकपार्श्वां
तत्पर्यङ्कप्रगलिततलवैर्म्लिष्टदहारैरिवास्रैः।
भूयोभूयः कठिनविषमां सारयन्तीं कपोला-
दामोक्तव्यामयमितनखेनैकवेणीं करेण ॥०॥
निश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम्।

दृष्टिं खेदात् सलिलगुरुभिः अश्रुदुर्भरैः पक्ष्मभिः छादयन्तीम् अतएव साभ्रे दुर्दिने अह्नि दिवसे न प्रबुद्धां मेघावरणादविकसितां न सुप्ताम् अहरित्यमुकुलिताम् (उभयत्रापि नञर्थस्य नशब्दस्य सुप्सुपेति समासः।) स्थलकमलिनिमिव स्थिताम्। एतेन विषयद्वेषाख्या षष्ठी दशा सूचिता॥२९॥

निश्वासेनेति। शुद्धस्नानात् तैलादिरहितस्नानात् परुषं कठिनस्पर्शं नूनम् आगण्डलम्बम् (सुप्सुपेति समासः।) अलकं चूर्णकुन्तलान् (जातावेकवचनम्।) अधरकिसलयं क्लेशयति क्लिश्नातीति वा तेन तथोक्तेन उष्णेनेत्यर्थः (क्लिश्यतेर्ण्यन्तात् क्लिश्नातेरण्यन्ताद्वा ताच्छील्ये णिनिः।) निश्वासेन विक्षिपन्तीं चालयन्तीं तथा स्वप्नजोऽपि स्वप्नावस्थाजन्योऽपि साक्षात्सम्भोगासम्भवादिति भावः मत्सम्भोगः कथं केनापि प्रकारेण उपनयेत् आग-

मत्सम्भोगः कथमुपनयेत् स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीड़रुद्धावकाशाम् ॥३०॥
आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् ।
स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ३१ ॥

च्छेत् इति आश्रयेनेति शेषः ( इति शब्दोक्तार्थत्वादप्रयोगः प्रयोगे चापौनरुक्त्यमित्यालङ्कारिकाः । प्रार्थनायां लिङ् ।) नयनसलिलोत्पीडेन अश्रुप्रवृत्त्या रुद्धावकाशाम् आक्रान्तस्थानां दुर्लभामित्यर्थः निद्राम् आकाङ्क्षन्तीं स्वप्नहेतुत्वादिति भावः । अत्रासुविसर्जनेन लज्जात्यागो व्यज्यते ॥ ३० ॥

आद्ये इति । आद्ये विरहदिवसे दाम मालां हित्वा त्यक्त्वा या शिखा बद्धा ग्रथिता शापस्यान्ते विगलितशुचा वीतशोकेन मया उद्वेष्टनीयां मोचनीयां स्पर्शक्लिष्टां स्पर्शे सति मूलकेशेषु सव्यथामित्यर्थः कठिना च सा विषमा निम्नोन्नता च ताम् (खञ्जकुब्जादिवदन्यतरस्य प्राधान्यविवक्षया विशेषणं विशेष्येण बहुलमिति समासः । ) एकवेणीम् एकीभूतवेणीम् ( पूर्वकालेत्यादिना तत्पुरुषः । ) तां शिखाम् अयमिता अकर्त्तितोपान्ता नखा यस्य तेन करेण गण्डाभोगात् कपोलविस्तारात् असकृत् मुहुर्मुहुः

सा सन्नस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम् ।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥३२॥
जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्यम्भूतां प्रथमविरहे तामहं तर्कयामि ।

सारयन्तीम् अपसारयन्तीं तां पश्येति पूर्वेण सम्बन्धः । असकृत् सारणात् चित्तविभ्रमदशा सूचिता ॥ ३१ ॥

सेति । अबला दुर्बला सन्न्यस्ताभरणं कृशत्वात् परित्यक्ताभरणम् असकृत् अनेकशः दुःखदुःखेन दुःखप्रकारेण (प्रकारे गुणवचनस्येति द्विर्भावः ।) शय्योत्सङ्गे निहितं पेशलं मृदुलं गात्रं शरीरं धारयन्ती वहन्ती अनेनात्यन्ताशक्त्या मूर्च्छावस्था सूच्यते सा त्वत्सखी त्वामपि नवजलमयं नवा-म्बुरूपम् अस्रं वाष्पं अवश्यं सर्वथा मोचयिष्यति (द्विकर्म्मसु पचादीनां चोपसंख्यानमिष्यते इति मुचेः पचादित्वात् द्विकर्म्मकत्वम् ।) तथाहि प्रायः प्रायेण आर्द्रान्तरात्मा मृदुहृदयः मेघस्तु द्रवान्तःशरीरः सर्वः करुणा करुणामयी वृत्तिः अन्तःकरणवृत्तिर्यस्य सः करुणावृत्तिर्भवति । अस्मिन्नवसरे सर्वथा शीघ्रं त्वया गन्तव्यम् अनन्तरदशा-परिहारायेति सन्दर्भाभिप्रायः ॥ ३२ ॥

ननु किमिदमादिमां चक्षुःप्रीतिमुपेक्ष्य अवस्थान्तरा-

**वाचालं मां न खलु सुभगम्मन्यभावः करोति**
**प्रत्यक्षन्ते निखिलमचिरात् भ्रातरुक्तं मया यत् ३३**

एवेव तत्र भवान् कविराडुक्तवान् उच्यते सम्भोगो विप्रलम्भश्च द्विधा शृङ्गार उच्यते। संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः। पूर्वानुरागमानाख्यप्रवासकरुणात्मना। विप्रलम्भश्चतुर्धात्र प्रवासस्तत्र च त्रिधा। कार्य्यतः सम्भ्रमाच्छापादस्मिन् काव्ये तु शापजः। प्रागसङ्गतयोर्य्यूनोः सति पूर्वानुरञ्जने। चक्षुःप्रीत्यादयोऽवस्था दश स्युस्तत्क्रमो यथा। दृङ्मनः सङ्गसङ्कल्पा जागरः कृशतारतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश। पूर्वसङ्गतयोरेव प्रवास इति कारणात्। न तत्रापूर्ववत् चक्षुःप्रीतिरुत्पत्तिमर्हति। ह्रत्सङ्गस्य तु सिद्धस्याप्यविच्छेदोऽत्र वर्ण्यते। अनन्यापूर्ववद्वाच्या इति तावद्व्यवस्थितिः। वैयर्थ्यादादिमां हित्वा वैरस्यादन्तिमां तथा। हृत्सङ्गादेरिहाचष्ट कविरष्टाविति स्थितिः। मत्सादृश्यं लिखन्तीति पद्येऽस्मिन् प्रतिपादिता। चक्षुःप्रीतिरिति प्रोक्तं निरुत्तरकृताननम्। चक्षुःप्रीतिर्भवेच्चित्रेष्वदृष्टचरदर्शनात्। यथा मालविकारूपमग्निमित्रस्य पश्यतः। प्रोषितानान्तु भर्त्तॄणां क्व दृष्टादृष्टपूर्वता। अथ तत्रापि सन्देहे सकलत्राणि पृच्छतु। किं भर्त्तृप्रत्यभिज्ञा स्यात् किं वैदेशिकभावना। प्रवासादागते स्वस्मिन्नित्यलं कलहेर्ष्यया ॥ ३३ ॥

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति॥३४॥

ननु ईदृशीं दशामापन्नेति कथं त्वया निश्चितम् अत आह जाने इति। हे मेघ तव सख्याः मनः मयि सम्भृतस्नेहं सञ्चितानुरागं जाने अस्मात् स्नेहज्ञानकारणात् प्रथमविरहे प्रथमग्रहणं दुःखातिशयद्योतनार्थम् तत्सखीम् इत्थम्भूतां पूर्वोक्तावस्थामापन्नां तर्कयामि। ननु सुभगमानिनामिष स्वभावो यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह वाचालमिति सुभगम् आत्मानं मन्यते इति सुभगम्मन्यः (आत्ममाने खश् चेति खश्प्रत्ययः। अरुर्द्विषदित्यादिना मुमागमः।) तस्य भावः सुभगम्मन्यभावः सुभगमानित्वं मां वाचालं बहुभाषिणं न करोति खलु सौन्दर्याभिमानान्न प्रलपामीत्यर्थः। (स्याज्जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवागित्यमरः। आलजाटचौ बहुभाषिणीत्यालच्प्रत्ययः।) किन्तु हे भ्रातः मयोक्तं यदाधिक्षामामित्यादि तत् निखिलं सर्वम् अचिरात् शीघ्रमेव ते तव प्रत्यक्षं भविष्यतीति शेषः॥३३॥

रुद्धेति। अलकैः रुद्धाः अपाङ्गयोः प्रसराः यस्य तत् तथोक्तम् अञ्जनेन स्नेहः स्निग्धत्वं तेन शून्यम् अपि च किञ्च

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।
सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥३५॥

मधुनः मद्यस्य प्रत्यादेशात् निराकरणात् परित्यागादित्यर्थः (प्रत्यादेशो निराकृतिरित्यमरः ।) विस्मृतः भ्रूविलासः भ्रूभङ्गो येन तत् तथोक्तं नयनस्य रुद्धापाङ्गप्रसरत्वादिकं विरहसमुत्पन्नमिति भावः त्वयि आसन्ने सति स्वकुशलवार्त्तां शंसिनीति शेषः उपरि ऊर्द्ध्वभागे स्पन्दते स्फुरति इति उपरिस्पन्दि (तथाच निमित्तनिदाने स्पन्दान्मूर्ध्नि च्छत्रलाभं भाले पट्टं शुभं भ्रुवि । इष्टप्राप्तिं दृशोरूर्द्ध्वमपाङ्गे हानिमादिशेदिति ।) (मृगाक्ष्याः तस्याः नयनं वाममिति शेषः) वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः । दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि चेति स्त्रीणां वामभाग प्राशस्त्यात् ।) मीनक्षोभात् मीनचलनात् चलस्य कुवलयस्य श्रिया शोभया तुलां सादृश्यम् एष्यतीति शङ्के तर्कयामि ॥ ३४ ॥

वाम इति । मदीयैः कररुहपदैर्नखपदैः । पुनर्भवः (कररुहो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः ।) मुच्यमानः परिहीयमाणः नखाङ्करहित इत्यर्थः । चिरपरिचितं चिराभ्यस्तं मुक्ताजालं मौक्तिकसरमयं कटिभूषणं दैवगत्या

तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ।
माभूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढ़ोपगूढ़म् ॥३६॥

दैववशेन त्याजितः । सम्प्रति नखपदोषाभावेन ग्रोतोपचारस्य तस्य वैयर्थ्यादिति भावः । त्यजतेर्ण्यन्तात् कर्म्मकर्त्तरि क्तः । पचादित्वात् द्विकर्म्मकत्वम् । सम्भोगान्ते मम हस्तसंवाहनानां हस्तेन मर्द्दनानाम् । (संवाहनं मर्द्दनं स्यादित्यमरः ।) समुचितो योग्यः सरसो रसार्द्रः परिपक्को न शुष्कस्य विवक्षितः तत्रैव पाण्डिमसम्भवात् । स चासौ कलोस्तम्भश्च स इव गौरः पाण्डुरः । (गौरः करीरे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि चेति मालतीमालायाम् ।) अस्याः प्रियायाः वाम ऊरुश्चलत्वं स्पन्दनं यास्यति प्राप्स्यते । ऊरोः स्पन्दाद्रतिं विन्द्यादूर्वोः प्राप्तिं सुवास स इति निमित्त निदाने ॥ ३५ ॥

तस्मिन्निति । हे जलद ! तस्मिन् काले त्वदुपसर्पणकाले सा यत्प्रिया लब्धं निद्रासुखं यया तादृशी स्याद्यदि स्याच्चेत् एनां निद्राणामन्वास्य पश्चादासित्वेत्यर्थः । ) उपसर्गवशात्सकर्म्मकत्वम् । ) स्तनितविमुखो गर्जितपराङ्मुखो निःशब्दः सन् अन्यथा निद्राभङ्गः स्यादिति भावः । याममात्रं प्रहरमात्रम् । (द्वौ यामप्रहरौ समावित्यमरः ।)

तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम्।
विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः॥३७॥

सहस्व प्रतीक्षस्व। प्रार्थनायां लोट्। यत्नयोरेकवार सुरतस्य यामावधिकत्वात् स्वप्नेऽपि तथा भवितव्यमित्यभिप्रायः। तथा च रतिसर्वस्वे। एकवारावधिर्यामो रतस्य परमो मतः। चन्द्रशक्तिमतोर्यूनोरद्भुतक्रमवर्त्तिनोरिति। यामसहनस्य प्रयोजनमाह माभूदिति। अस्याः प्रियायाः प्रणयिनि प्रेयसि मयि कथञ्चित् कष्टेन स्वप्नलब्धे सति गाढोपगूढं गाढालिङ्गनम्। (नपुंसके भावे क्तः।) सद्यस्तत्क्षणं कण्ठात् च्युतः भुजलतयोर्ग्रन्थिबन्धो यस्य तन्मा भूत् मास्तु कथञ्चिल्लब्धालिङ्गनस्य विघातो माभूदित्यर्थः। न चात्र निद्रोक्तिस्तामुन्निद्रामिति पूर्वोक्तेन विरुध्यते पुनः सप्तम्याद्यवस्थासु पाक्षिकनिद्रासम्भवात्। तथा च रसरत्नाकरे। (आसक्तौ रोदनं निद्रा निर्लज्जानर्थवाग्भ्रमः। सप्तमादिषु जायन्ते दशाभेदेषु वासुके इति)॥ ३६॥

तामिति। तां प्रियां स्वस्य जलकणिकाभिर्जलबिन्दुभिः शीतलेनानिलेनोत्थाप्य प्रबोध्य। एतेन तस्याः प्रभुत्वाद्राजनानिलसमाधिर्व्यज्यते। यथाह भोजराजः। मृदुभिर्मर्दनैः पादे शीतलैर्व्यजनैः स्तनौ। श्रुतौ च मधुरै-

भर्त्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ३८

र्गीतैर्निद्रातो बोधयेत् प्रभुर्मिति। अभिनवैर्मालतीनां जालकैः समं जातीमुकुलैः सह। सुमनामालती जातिरिति। साकं सत्रासमं सहेति। (क्षारको जालकं क्लीवे कलिका कोरकः पुमानिति चामरः।) प्रत्याश्वस्तां सुस्थिताम्। अन्यत्र पुनरुच्छ्वसिताम्। (श्वसेः कर्त्तरि क्तः।) एतेनास्याः सौकुमार्य्यं गम्यते। त्वत्सनाथे त्वत्सहिते। गवाक्षे स्तिमितनयनां कोऽसाविति विस्मयान्निश्चलनेत्रां मानिनीं मनस्विनीं जनानौचित्यासहिष्णुमित्यर्थः।(विद्युत् गर्भा अन्तःस्था यस्य स विद्युद्गर्भः अन्तर्लीनविद्युत्क इत्यर्थः। गर्भोपवरकेऽन्तःस्थे गर्भोऽग्नौ कुक्षिणोऽर्भके इति शब्दार्णवः।) दृष्टिप्रतिघातेन वक्तुर्मुखावलोकनप्रतिबन्धकत्वान्न विद्युताद्योतितव्यमिति भावः। धीरो धैर्य्यविशिष्टश्च सन् अन्यथा लोलत्वादिनैतदनाश्वासनप्रसङ्गादिति भावः। स्तनितवचनैः स्तनितान्येव वचनानि तैर्वक्तुं प्रक्रमेथा उपक्रमस्व। (विध्यर्थे लिङ्। प्रोपाभ्यामित्यात्मनेपदम्)॥३७॥

सम्प्रति दूतस्य श्रोतृजनाभिमुखीकरणाचातुरीमुपदिशति, भर्त्तुरिति। विधवा गतभर्तृका न भवतीति अविधवा सभर्तृका हे अविधवे! अनेन भर्तृजीवनसूच-

इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।
श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपनतः सङ्गमात्किञ्चिदूनः ॥३९॥

नादनिष्टाशङ्कां वारयति। मां तव भर्त्तुः प्रियं मित्रं प्रियसुहृदं तत्रापि हृदयनिहितैर्मनसिस्थापितैस्तत् सन्देशैस्तस्य भर्त्तुः सन्देशैस्त्वत्समीपमागतं भर्त्तुः सन्देशकथनार्थमागतमित्यर्थः। अम्बुवाहं मेघं विद्धि जानीहि। न केवलमहं वार्त्ताहरः किन्तु घटकोऽपीत्याशयेनाह योऽम्बुवाहामन्द्रस्निग्धैः स्निग्धगम्भीरैः ध्वनिभिः करणैः अबलानां स्त्रीणां वेणयस्तासां मोक्षे मोचने उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनां पान्थानामित्यर्थः वृन्दानि सङ्घान् त्वरयति। पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः ॥ ३८ ॥

भर्तृसख्यादिज्ञापनस्य फलमाह इतीति। इत्येवमाख्याते पवनतनयं हनूमन्तं मैथिली सीतेव सा मत्प्रिया उन्मुखी उत्कण्ठया औत्सुक्येन उच्छ्वसितहृदया विकसितचित्ता च सती त्वां वीक्ष्य सम्भाव्य सत्कृत्य अस्मात् भर्तृमैत्रीज्ञापनात्परं सर्वं श्रोतव्यम् अवहिता अप्रमत्ता सती श्रोष्यति च। अत्र सीता हनूमदुपाख्यानादस्याः पातिव्रत्यं मेघस्य दूतगुणसम्पत्तिश्च व्यज्यते। तदृ णास्तु

तामायुष्मन्मम च वचनादात्मनश्चोपकर्त्तुं
ब्रूयादेवं तव सहचरो रामगिर्य्याश्रमस्थः।
अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥४०॥

रत्नाकरे। (ब्रह्मचारी बली धीरो मायावी मानवर्जितः। धीमानुदारो निःशङ्को वक्ता दूतः स्त्रियां भवेदिति।) ननु वार्त्तामात्रश्रवणादस्याः को लाभ इत्याशङ्क्यार्थान्तरमुपन्यस्यति। हे सौम्य! साधो सीमन्तिनीनां बधूनाम्। नारी सीमन्तिनी बधूरित्यमरः। सुहृदा सुहृन्मुखेनोपनतः प्राप्तः। सुहृत्पदं विप्रलम्भशङ्कानिवारणार्थम्। कान्तस्योदन्तो वार्त्ता कान्तोदन्तः। (वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः।) सङ्गमात् कान्तसम्पर्कात् किञ्चिदूनः ईषदूनः तद्वदेवानन्दकारीत्यर्थः ॥ ३९ ॥

सम्प्रति सन्दिशति तामिति। हे आयुष्मन्! प्रशंसायां मतुप्। परोपकारश्लाघ्यजीवितेत्यर्थः। मम वचनं प्रार्थनावचनं तस्माच्च आत्मनः स्वस्योपकर्त्तुञ्च परोपकारेणात्मानं कृतार्थयितुमित्यर्थः। (उपकारक्रिया प्रतिकर्म्मत्वेऽपि तस्यानुकरोतीत्यादिवत्सम्बन्धमात्रविवक्षायामात्मन इति षष्ठी न विरुध्यते।) यथाह भारविः। (स लक्ष्मीरुपकुरुते यया परेषामिति। तथा श्रीहर्षस्य। साधूनामुपकर्त्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुमिति।) तां प्रियामेवं ब्रूयात्

अङ्गेनाङ्गं प्रतनु तनुना गाढ़तप्तेन तप्तं
सास्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः॥४१॥

भवानिति शेषः। किमित्याह हे अबले! तव सहचरो भर्त्ता रामगिरिश्चित्रकूटस्याश्रमेषु तिष्ठतीति रामगिर्य्याश्रमस्थः सन्न व्यापन्नः न मृतः। अमरणे हेतुमाह वियुक्तो वियोगं प्राप्तो दुःखी सन् त्वां कुशलं पृच्छति दुह्यादित्वात् पृच्छतेर्द्विकर्म्मकत्वम्। तथा हि सुलभविपदामयत्नसिद्धविपत्तीनां प्राणिनाम् एतदेव कुशलमेव पूर्वाभाष्यम् एतदेव प्रथममवश्यं प्रष्टव्यम्। कृत्याश्चेत्यावश्यकार्थे ण्यप्रत्ययः॥ ४०॥

अङ्गेनेति। किञ्च दूरवर्त्ती दूरस्थः। न चागन्तुं शक्यत इत्याह वैरिणा विरोधिना विधिना दैवेन रुद्धमार्गः प्रतिबद्धवर्त्मा स ते सहचरः तनुना कृशेन गाढ़तप्तेनात्यन्तसन्तप्तेन सास्रेण साश्रुणा उत्कण्ठा वेदना अस्य जाता उत्कण्ठितः तेनोत्कण्ठितेन। (तदस्य सञ्जातमित्यादिना इतच्प्रत्ययः। उत्कण्ठतेर्वा कर्त्तरि क्तः।) समधिकतरमधिकमुच्छ्वसितीति समधिकरोच्छ्वासी तेन दीर्घनिश्वासिनेत्यर्थः। अङ्गेन स्वशरीरेण प्रतनु कृशं तप्तं सन्तप्तमश्रुद्रुतमश्रुक्लिन्नम्। (अश्रु नेत्राम्बुरोदनञ्चास्रमस्रु चेत्य-

शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात्
सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कण्ठारविरचितपदं मन्मुखेनेदमाह ॥४२॥

मरः ।) अविरतोत्कण्ठमविच्छिन्नवेदनम् उष्णोच्छ्वासं तीव्र-निःश्वासम् । (तिग्मं तीव्रं खरं तीक्ष्णं चण्डमुष्णं समं स्मृतमिति हलायुधः ।) अङ्गं त्वदीयं तैः स्वसंवेद्यैः सङ्कल्पैर्मनोरथैर्विशत्येकीभवतीत्यर्थः । अत्र समरागित्वद्योतनाय नायकेन नायिकायाः समानावस्थत्वमुक्तम् ॥ ४१ ॥

सम्प्रति स्वावस्थानिवेदनाय प्रस्तौति शब्दाख्येयमिति । हे अबले । यस्ते प्रियः सखीनां पुरस्तादग्रे आननस्पर्शे त्वन्मुखसम्पर्के लोभात् शब्दाख्येयं शब्देन रवेणाख्येयम् उच्चैर्वाच्यमपि यत् तद्वचनमपीति शेषः । कर्णे कथयितुं लोलो लालसोऽभूत् किल । (लोलुपो लोलभो लोलो लालसो लम्पटोऽपि चेति यादवः । श्रवण-विषयं कर्णपथम् अतिक्रान्तः तथा लोचनाभ्यामदृष्टः । अतिदूराद्द्रष्टुं श्रोतञ्च न शक्य इति भावः । स ते प्रियः त्वाम् उत्कण्ठया विरचितानि पदानि (सुप्तिङन्तशब्दाः वाक्यानि वा यस्य तत्तथोक्तम् । पदं शब्दे च वाक्ये चेति विश्वः )। इदं वक्ष्यमाणं मन्मुखेनाह सन्मुखेन स एव ब्रूते इत्यर्थः ॥ ४२ ॥

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां वर्हभारेषु केशान् ।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन्क्वचिदपि नते चण्डि साहश्यमस्ति ४३

साहश्यप्रतिकृतिस्वप्नदर्शनतदङ्गस्पृष्टस्पर्शाख्यानि चत्वारि विरहिणां विनोदस्थानानि तथा चोक्तं पताकायाम् । वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपनतवतां दर्शन मपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदित इति । तत्र सदृशवस्तु दर्शनमाह ।

श्यामास्विति । श्यामासु प्रियङ्गुलतासु । ( श्यामा तु महिलाह्वया लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फलीत्यमरः ।) अङ्गं शरीरमुत्पश्यामि सौकुमार्य्यादिसाम्यादङ्गमिति तर्कयामीत्यर्थः । तथा चकितहरिणीनां प्रेक्षणे दृष्टिपातं शशिनि चन्द्रे वक्त्रच्छायां मुखकान्तिं तथा शिखिनां वर्हिणां वर्हभारेषु वर्हसमूहेषु केशान् प्रतनुषु स्वल्पासु नदीनां वीचीषु । अत्र वीचीनां विशेषणोपादानेन तानुक्तगुणग्रहो दोषः भ्रूसाम्यनिर्वाहाय महत्त्वदोषनिराकरणार्थत्वार्थत्वात्तस्येति । तदुक्तं रसरत्नाकरे । ( नानुत्पादे गुणोत्कर्षे भोगोक्तौ दोषवारणे । विशेषणादिदोषस्य नास्त्यनुक्तगुणाग्रह इति ।) भ्रूविलासान् । भ्रूपताका इति पाठे भ्रवः पताका (इवेत्युपमितसमासः ।) उत्पश्या-

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥४४॥

मीति सर्वत्र सम्बध्यते। तथापि नास्ति मनोनिर्वृतिरित्याशयेनाह हन्तेति हन्तविषादे। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः। हे चण्डि! अतिकोपने। (चण्डस्त्वत्यन्तकोपन इत्यमरः। गौरादित्वात् ङीष्।) उपमानकथनमात्रेण न कोऽपि तव्यमिति भावः। क्वचिदपि कस्मिन्नप्येकस्मिन् वस्तुनि ते तव सादृश्यं नास्त्यतो न निर्वृणोमीत्यर्थः। अनेन अस्य सौन्दर्य्यमनुपममिति व्यज्यते॥४३॥

सम्प्रति प्रतिकृतिदर्शनमाह त्वामिति। हे प्रिये! प्रणयेन प्रेमातिशयेन कुपितां कुपितावस्थायुक्तां त्वां त्वत्प्रतिकृतिमित्यर्थः धातवः गैरिकादयः (धातुर्वातादिशब्दादिगैरिकादिष्वजादिष्विति यादवः।) ते एव रागाः रञ्जकद्रव्याणि (चित्रादिरञ्जकद्रव्ये लाक्षादौ प्रणयेच्छयोः। सारङ्गादौ च रागः स्यादारव्ये रञ्जने पुमानिति शब्दार्णवे।) तैः धातुरागैः शिलायां शिलापट्टे आलिख्य निर्माय आत्मानं मां मत्प्रतिकृतिमित्यर्थः ते तव चित्रगतायाः इत्यर्थः चरणपतितं कर्त्तुं तथा लिखितुं यावत् इच्छामि तावत् इच्छासमकालं मुहुः उपचितैः प्रवृद्धैः अस्रैः अश्रुभिः कर्तृभिः (अस्रमश्रुणि शोणिते

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति ।
घर्म्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविततघनव्यस्तसूर्य्यातपानि ॥०॥
मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।

इति विश्वः। मे दृष्टिः आलुप्यते आव्रियते इत्यर्थः ततः दृष्टिप्रतिबन्धात् लेखनं प्रतिबध्यते इति भावः क्रूरः घातुकः ( नृशंसो घातुकः क्रूर इत्यमरः ।) कृतान्तः दैवम् (कृतान्तो यमसिद्धान्तदैवाकुशलकर्म्मस्वित्यमरः । ) तस्मिन्नपि चित्रेऽपि नौ आवयोः ( युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नाविति नावादेशः । ) सङ्गमं सहवासं न सहते । सङ्गमलेखनमप्यावयोरसहमानं दैवमावयोः साक्षात् सङ्गमं न सहते इति किमु वक्तव्यम् इति अपिशब्दार्थः॥४४॥

अधुना स्वप्नदर्शनमाह मामिति। सुप्तस्य विज्ञानं स्वप्नः (स्वप्नः सुप्तस्य विज्ञानमिति विश्वः। ) सन्दर्शनं संवित् ( दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षि संविदीति शब्दार्णवे ।) स्वप्ना इति सन्दर्शनानि स्वप्नज्ञानानि चूतवृक्षादिवत् सामान्यविशेषभावेन सहप्रयोगः तेषु मया कथमपि महता प्रयत्नेन लब्धायाः गृहीतायाः दृष्टायाः इति यावत् ते तव निर्दयाश्लेषः गाढालिङ्गनं स एव हेतुः तस्य निर्द-

पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥४५॥
भित्त्वा सद्यः किशलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः।

याश्लेषार्थमित्यर्थः (षष्ठी हेतुप्रयोग इति षष्ठी।) आकाशे निर्विषये प्रणिहितभुजं प्रसारितबाहुं मां पश्यन्तीनां स्थलीदेवतानां मुक्ताः मौक्तिकानि इव स्थूलाः अश्रुलेशाः वाष्पविन्दवः तरुकिशलयेषु अनेन चेलाञ्चलेन अश्रु धारणसमाधिर्ध्वन्यते बहुशो न पतन्तीति न किन्तु पतन्त्येव इत्यर्थः। (निश्चये नञ्द्वयप्रयोगः तथा चालङ्कारिकसूत्रं स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वयप्रयोग इति। महात्मगुरुदेवानामश्रुपातः क्षितौ यदि। देशभ्रंशो महादुःखं मरणञ्च भवेद् ध्रुवमिति क्षितौ देवताश्रुपातनिषेधदर्शनात् यक्षस्य मरणाभावसूचनार्थं तरुकिशलयेषु पतन्तीत्युक्तम्॥ ४५॥

इदानीं तदङ्गस्पृष्टवस्तुस्पर्शनमाह भित्त्वेति। देवदारुद्रुमाणां किशलयपुटान् पल्लवपुटान् सद्यः भित्त्वा ये तत्क्षीरस्रुतिसुरभयः तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिः क्षीरनिष्यन्दैः सुरभयः सुगन्धयः तुषाराद्रिवातले लिङ्गमिदं ये वाताः दक्षिणेन दक्षिणमार्गेण (तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात् तृतीया समेन यातीतिवत् तत्रापि करणत्वस्य प्रतीयमानत्वात् कर्तृकरणयोरेव तृतीयेति भाष्यकारः।) प्रवृत्ताः चलिताः हे गुणवति

आलिङ्गान्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥४६॥
सङ्क्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात्।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः॥४७॥

सौशील्यसौकुमार्य्यादिगुणसम्पन्ने ते तुषाराद्रिवाताः पूर्वं प्राक् एभिः वातैः तव अङ्गं स्पृष्टं भवेत् यदि किलेति सम्भावितमेतदिति बुद्धेरित्यर्थः (वार्त्तासम्भाव्ययोः किलेत्यमरः।) मया आलिङ्ग्यन्ते आश्लिष्यन्ते। अत्र वायूनां स्पृश्यत्वेऽपि) अमूर्त्तत्वेन आलिङ्गनायोगात् आलिङ्ग्यन्ते इत्यभिधानं यक्षस्य उन्मत्तत्वात् प्रलपितमित्यदोष इति वदन् निरुक्तकारः स्वयमेव उन्मत्तप्रलापोल्युपेक्षणीयः ॥४६॥

संक्षिप्येतेति। दीर्घाः यामाः प्रहराः यस्यां सा दीर्घयामा विरहवेदनया तथा प्रतीयमानेत्यर्थः त्रियामा रात्रिः (आद्यन्तयोरर्द्धयामयोर्दिनव्यवहारात् त्रियामेति क्षीरस्वामी।) क्षण इव कथं केन प्रकारेण संक्षिप्येत लघूक्रियेत अहः अपि सर्वावस्थासु सर्वकालेषु इत्यर्थः मन्दमन्दोमन्दप्रकारः (प्रकारे गुणवचनस्येति द्विरुक्तिः। कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावात् सुपो लुक्।) मन्दमन्दातपम् अत्यल्पसन्तापं कथं स्यात् न स्यादेव हे

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि नितरां मागमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥४८॥

चटुलनयने चञ्चलाक्षि इत्थम् अनेन प्रकारेण दुर्लभप्रार्थनम् अप्राप्यमनोरथं मे मम चेतः गाढोष्माभिः अतितीव्राभिः त्वद्वियोगव्यथाभिः अशरणम् अनाथं कृतम् ॥४७॥

न च मदीयदुर्दशाश्रवणेन भेतव्यमित्याह नन्विति । ननु इति आमन्त्रणे (प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः ।) ननु प्रिये बहु विगणयन् शापान्ते सति एवमेवं करिष्यामीति आवर्त्तयन् आत्मानं आत्मनैव स्वेनैव (प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया ।) अवलम्बे धारयामि यथाकथञ्चित् जीवामि इत्यर्थः । तत् तस्मात् कारणात् हे कल्याणि सुभगे त्वत्सौभाग्येनैव जीवामीति भावः ( बह्वादिभ्यश्चेति ङीष् ।) त्वमपि नितराम् अत्यन्तं कातरत्वं भीरुत्वं मा गमः मा गच्छ (गमेर्माङि लुङ् । न माङ्योगे इत्यडागमाभावः ।) तादृक्सुखिनोरावयोः ईदृग्विधे दुःखे कथं न बिभेमीत्याशङ्क्याह कस्येति कस्य जनस्य अत्यन्तं नियतं सुखम् उपनतं प्राप्तम् एकान्ततः नियमेन दुःखं वा उपनतं किन्तु दशा अवस्था चक्रस्य रथाङ्गस्य नेमिः अन्तः ( चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमानित्यमरः ।) तस्याः क्रमेण परिपाट्या ( क्रमः शक्तौ परीपाट्या-

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु॥४६॥

मिति विश्वः ।) नीचैः अधः उपरि च गच्छति प्रवर्त्तते जन्तोः सुखदुःखे पर्य्यावर्त्तेते इत्यर्थः ॥ ४८ ॥

न च निरवधिकमेतद्दुःखमित्याह शापान्त इति । शार्ङ्गं नाम धनुः पाणौ स्थितं यस्य तस्मिन् शार्ङ्गपाणौ विष्णौ ( सप्तम्युपमानेत्यादिना बहुव्रीहिः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यात् पाणिशब्दस्योत्तर-निपातः ।) भुजगः शेष एव शयनं तस्मात् उत्थिते सति मे शापान्तः शापावसानम् भविष्यतीति शेषः शेषान् अव-शिष्टान् चतुरो मासान् मेघदर्शनप्रभृति हरिबोधन-दिनान्तमित्यर्थः दशदिवसाधिक्यन्तु न विवक्षितमित्युक्त-मेव लोचने मीलयित्वा निमील्य गमय धैर्य्येण अतिवाहय इत्यर्थः पश्चात् अनन्तरं त्वञ्च अहञ्च आवाम् ( त्यदादीनि सर्वैर्नित्यमित्येकशेषः । त्यदादीनां मिथो द्वन्द्वे यत्परं तच्छिष्यते इति अस्मदः शेषः ।) विरहे गणितम् एवमेवं करिष्यामीति मनसि आवर्त्तितं तं तम् ( वीप्सायां द्विरुक्तिः ।) आत्मनोः आवयोः अभिलाषं मनोरथं परि-णताः शरच्चन्द्रिकाः यासां तासु क्षपासु रात्रिषु निर्वेक्ष्यावः भोक्ष्यावहे । विशतेर्लृट् । निर्वेशो भृतिभोगयोरित्यमरः ।

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वनं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव रमयन् कामपि त्वं मयेति ॥५०॥

अत्र कश्चित् नभोनभस्ययोरेव वार्षिकत्वात् कथमाषाढादि चतुष्टयस्य वार्षिकत्वमुक्तमिति चोदयित्वा ऋतुद्वयपचाश्रयणाद्विरोध इति पर्य्यहारि तत्सर्वमसङ्गतम् अत्र गतशेषाश्चत्वारो मासा इत्युक्तं कविना नतु ते वार्षिका इति तस्मादनुक्तोपालम्भ एव । यच्च नाथेनोक्तं कथमाषाढादि चतुष्टयात् परं शरत्काल इति तत्रापि आ कार्त्तिकसमाप्तेः शरत्कालानुवृत्तेः परिणतशरच्चन्द्रिकासु इत्युक्तं नतु तदैव शरत्प्रादुर्भाव उक्त इत्यविरोध एव ॥ ४९ ॥

सम्प्रति तस्या मेघवञ्चकत्वशङ्कानिरासाय अतिगूढमभिज्ञानमुपदिशति भूय इति । हे अबले भूयः पुनरपि आह त्वद्भर्त्ता मन्मुखेनेति शेषः मेघवचनमेतत् किमित्यत आह पुराशब्दश्चिरातीते ( स्यात् प्रबन्धे चिरातीते निकटागामिके पुरेत्यमरः । ) पुरा पूर्वं शयने मे कण्ठलग्नापि त्वं गले बद्धस्य कथमपि गमनं न सम्भवेदिति भावः निद्रां गत्वा किमपि केन वा निमित्तेन इत्यर्थः सस्वरं सशब्दम् उच्चैरित्यर्थः रुदती सती विप्रबुद्धा आसीरिति शेषः । असकृत् बहुशः पृच्छतः रोदनहेतुमिति शेषः मे मम हे कितव त्वं कामपि रमयन् मया स्वप्ने दृष्ट इति त्वया

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनाच्चकितनयने मय्यविश्वासिनी भूः।

सान्तर्हासं समन्दहासं यथा तथा कथितञ्च इति त्वद्भर्त्ता भूयश्चाहेति योजना॥ ५०॥

एतस्मादिति। एतस्मात् पूर्वोक्तात् अभिज्ञायतेऽनेनेति अभिज्ञानं लक्षणं तस्य दानात् प्रापणात् मां कुशलिनं क्षेमवन्तं विदित्वा ज्ञात्वा हे असितनयने कुले जनसमूहे भवात् कौलीनात् लोकप्रवादात् एतावता कालेन परासुर्नो चेत् आगच्छतीति जनप्रवादादित्यर्थः (स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणामित्यमरः।) मयि विषये अविश्वासिनी मरणशङ्किनी मा भूः न भव (भवतेर्लुङ् न माङ्योगे इत्यडागमप्रतिषेधः।) नच दीर्घकालविप्रकर्षात् पूर्वस्नेहनिवृत्तिः शङ्क्या इत्याह स्नेहानिति किमपि किंवा निमित्तं न विद्यते इति शेषः स्नेहान् प्रीतीः विरहे सति अन्योन्यविप्रकर्षे सति ध्वंसिनः विनश्वरान् आहुः तत् तथा न भवतीति अभिप्रायः किन्तु ते स्नेहा अभोगात् विरहे भोगाभावात् हेतोः (प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते।) इष्टे वस्तुनि विषये उपचितः रसः स्वादः येषु ते उपचितरसाः सन्तः प्रवृद्धतृष्णा इत्यर्थः (रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोरिति विश्वः।) प्रेमराशी भवन्ति वियोगासहिष्णुत्वमापद्यन्ते इत्यर्थः। स्नेहप्रेमणोरवस्थाभेदाद्भेदः तदुक्तम् आलोकनाभिलाषौ रागस्नेहौ

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति॥५१॥
आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः॥ ५२॥

ततः प्रेमा। रति शृङ्गारौ योगे वियोगतो विप्रलम्भ-श्चेति। तदेव स्फुटीकृतं रसाकरे प्रेमा दिदृक्षा रम्येषु तच्चिन्ता त्वभिलाषकः। रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्-प्रवणक्रिया। तद्वियोगासहं प्रेमरतिस्तत्सहवर्त्तनम्। शृङ्गारस्तत्समः क्रीड़ा संयोगः सप्तधा क्रमादिति॥ ५१॥

इत्थं स्वकुशलं सन्दिश्य तत्कुशलसन्देशानयनमिदानीं याचते आश्वास्येति। प्रथमविरहेण उदग्रशोकां तीव्र-दुःखां ते सखीम् एवं पूर्वोक्तरीत्या आश्वास्य उपजीव्य त्रिनयनस्य त्र्यम्बकस्य वृषेणवृषभेण उत्खाताः अवदा-रिताः कूटाः शिखराणि यस्य तस्मात् (कूटोऽस्त्री शिखरं शृङ्गमित्यमरः।) शैलात् कैलासात् आशु निवृत्तः प्रत्या-वृत्तः सन् साभिज्ञानं सलक्षणं यथा तथा प्रहितं प्रेषितं कुशलं येषु तैः तस्याः त्वत्सख्याः वचोभिः ममापि प्रातः-कुन्दप्रसवमिव शिथिलं दुर्बलं ममजीवितमपि धारयेथाः स्थापय। (प्रार्थनायां लिङ्।)॥ ५२॥

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥५३॥

सम्प्रति मेघस्य प्रार्थनाङ्गीकारं प्रश्नपूर्वकं कल्पयति कच्चिदिति । हे सौम्य साधो इदं मे बन्धुकृत्यं बन्धुकार्य्यम् देवदत्तस्य गुरुकुलमितिवत्प्रयोगः । ) व्यवसितं कच्चित् करिष्यामीति निश्चितं किम् ( कच्चित् कामप्रवेदने इत्यमरः । अभिप्रायज्ञापनं काम प्रवेदनम् । ) न च ते तूष्णीम्भावादनङ्गीकारं शङ्के यतस्ते स एव उचित इत्याह प्रत्यादेशात् करिष्यामीति प्रतिवचनात् ( उक्तिराभषणं वाक्यमादेशो वचनं वच इति शब्दार्णवे । ) भवतः तव धीरतां गम्भीरत्वं न तर्कयामि न समर्थये खलु । तर्हि कथमङ्गीकारज्ञानं तत्राह याचितः सन् निःशब्दोऽपि निर्गर्जितोऽपि अप्रतिजानानोऽपीत्यर्थः चातकेभ्यः जलं प्रदिशसि ददासि । युक्तश्चैतदित्याह हि यस्मात् सतां सत्पुरुषाणां प्रणयिषु याचकेषु विषये ईप्सितार्थक्रियैव अपेक्षितार्थसम्पादनमेव प्रत्युक्तं प्रतिवचनं क्रिया केवलमुत्तरमित्यर्थः । गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः । नीचो वदति न कुरुते न वदति सुजनः करोत्येव इति भावः ॥ ५३ ॥

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या।
इष्टान् देशान् जलद विचर प्रावृषा सम्भृतश्री-
र्माभूदेवं क्षणमपि च ते विद्युता विप्रयोगः॥५४॥
तत्सन्देशं जलधरवरो दिव्यवाचाचचक्षे
प्राणांस्तस्या जनहिततरो रक्षितुं यक्षवध्वाः।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्त्तुः
केषां न स्यादवितथफला प्रार्थनाह्युन्नतेषु॥०॥
श्रुत्वा वार्त्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः।

सम्प्रति स्वापराधसमाधानपूर्व्वकं स्वकार्य्यस्य अवश्य-करणं प्रार्थयमानो मेघं विसृजति एतदिति। हे जलद सौहार्दात् सुहृद्भावात् वा (हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यु-भयपदवृद्धिः।) विधुरः वियुक्तः इति हेतोः मयि विषये अनुक्रोशबुद्ध्या करुणाबुद्ध्या वा अनुचिता तव अननुरूपा या प्रार्थना प्रियां प्रति सन्देशं मे हरेत्येवं रूपा तत्र वर्त्तिनः निर्बन्धपरस्य मे मम एतत् सन्देशहरणरूपं प्रियं कृत्वा सम्पाद्य प्रावृषा वर्षाभिः (स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः इत्यमरः।) सम्भृतश्रीः उपचितशोभः सन् इष्टान् अभिलषितान् देशान् विचर यथेष्टदेशेषु विहर इत्यर्थः

संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानभिरतसुखं भोजयामास शश्वत् ॥०॥

इति श्रीमहाकवि कालिदासकृतं मेघदूतं
समाप्तम् ।

( देश कालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणामिति वचनात् कर्म्मत्वम् । एवं मद्वत् क्षणमपि स्वल्पकालमपि ते तव विद्युता कलत्रेण इति शेषः विप्रयोगः विरहः मा भूत् मास्तु । ( कार्शिष्याशिषि लुङ् । ) अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्तमाम् । सर्वत्र व्याप्यते विद्वान् नायकेच्छानुरूपिणीमिति सारस्वतालङ्कारे दर्शनात् काव्यान्ते नायकेच्छानुरूपोऽयमाशीर्वादः प्रयुक्त इत्यनुसन्धेयम् ॥ ५४ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां मेघसन्देशव्याख्यायां सञ्जीवन्यामुत्तरमेघः ।

---

समाप्तोऽयं ग्रन्थः ।